# ब्रह्मोपनिषत्

ॐ शौनको ह वै महाशालोऽङ्गिरसं भगवन्तं
पिप्पलादमपृच्छत् । दिव्ये ब्रह्मपुरे सम्प्रतिष्ठिता
भवन्ति कथं सृजन्ति कस्यैष महिमा बभूव यो
ह्येष महिमा बभूव क एषः ।
तस्मै स होवाच ब्रह्मविद्यं वरिष्ठाम् । प्राणो ह्येष
आत्मा । आत्मनो महिमा बभुव देवानामायुः स देवानां
निधनमनिधनं दिव्ये ब्रह्मपुरे विरजं निष्कलं
शुभ्रमक्षरं यद्ब्रह्म विभाति स नियच्छति
मधुकरराजानं माक्षिकवदिति । यथा माक्षीकैकेन
तन्तुना जालं वक्षिपति तेनापकर्षति तथैवैष प्राणो
यदा याति संसृष्टमाकृष्य । प्राणदेवतास्ताः सर्वा
नाड्यः । सुष्वपे श्येनाकाशवद्यथा खं श्येनमाश्रित्य
याति स्वमालयमेवं सुषुप्तो ब्रूते यथैवैष देवदत्तो
यष्ट्याऽपि ताड्यमानो न यत्येवमिष्टापूर्तैः
शुभाशुभैर्न लिप्यते । यथा कुमारो निष्काम
आनन्दमुपयाति तथैवैष देवदत्तः स्वप्न आनन्दमभियाति ।
वेद एव परं ज्योतिः ज्योतिष्कामो ज्योतिरानन्दयते ।
भूयस्तेनैव स्वप्नाय गच्छति जलौकावत् । यथा
जलौकाऽग्रमग्रं नयत्यात्मानं नयति परं संधय ।
यत्परं नापरं त्यजति स जाग्रदभिधियते । यथैवैष
कपालाष्टकं संनयति । तमेव स्तन इव लम्बते
वेददेवयोनः । यत्र जाग्रति शुभाशुभं निरुक्तमस्य
देवस्य स सम्प्रसारोऽन्थर्यामी खगः कर्कटकः पुष्करः
पुरुषः ग्राणो हिंसा परापरं ब्रह्म आत्मा देवता वेदयति ।
य एवं वेद स परं ब्रह्म धं क्षेत्रज्ञमुपैति ॥ १॥

अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति
नाभिर्हृदयं कण्ठं भूर्धेति । तत्र चतुष्पादं
ब्रह्म विभाति । जागरितं स्वप्नं सुषुप्तं तुरीयमिति ।
जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयं
परमाक्षरं आदित्यश्च विष्णुश्चेश्वरश्च स पुरुषः
स प्राणः स जीवः सोऽग्निः सेश्वरश्च जाग्रत्तेषं मध्ये
यत्परं ब्रह्म विभाति । स्वयममनस्कमश्रोत्रमपाणिपादं
ज्योतिर्वर्जितं न तत्र लोका न लोका वेदा न वेदा देवा न
देवा यज्ञा न यज्ञ माता न माता पिता न पिता स्नुष न
स्नुष चाण्डालो न चाण्डालः पैल्कसो न पैल्कसः श्रमणो न

श्रमणः पशवो न पशवस्तापसो न तापस इत्येकमेव
परं ब्रह्म विभाति । हृद्याकाशे तद्विज्ञानमाकाशं
तत्सुषिरमाकाशं तद्वेद्यं हृद्याकाशं यस्मिन्निदं
संचरति वचरति यस्मिन्निदं सर्वमोतं प्रोतं । सं
विभोः प्रजा ज्ञायेरन् । न तत्र देवा ऋषयः पितर रिशते
प्रतिबुद्धः सर्वविदिति ॥ २॥

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि प्राणश्च ज्योतिश्च त्रिवृत्सूत्रं च यन्महत् ॥

हृदि चैतन्ये तिष्ठति यज्ञोपवीतं परमं पवित्रं
प्रजापतेर्यत्सहजं पुरस्तात् ।
आयुष्यमग्रपं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥

सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत् ॥

सूचनात्सूत्रमित्याहुः सूत्रं नाम परं पदम् ।
तत्सूत्रं विदितं येन स विप्रो वेदपारगः ॥

तेन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत्सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शिवान् ॥

बहिःसूत्रं त्यजेद्विद्वान्योगमुत्तममास्थितः ।
ब्रह्मभावमयं सूत्रं धारयेद्यः स चेतनः ॥

धारणात्तस्य सूत्रस्य नोच्छिष्ठो नाशुचिर्भवेत् ।
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ॥

ते चै सूत्रविदो लोके ते च यज्ञोपवीतिनः ।
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिहः ॥

ज्ञानमेव परं तेषां पवित्रं ज्ञानमुत्तमम् ।
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ॥

स शिखीत्युच्यते विद्वानितरे केशधारिणः ॥ ३॥

कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।

तैः संधार्यमिद सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥

इदं यज्ञोपवीतं तु पवित्रं यत्परायणम् ।
स विद्वान्यज्ञोपवीती स्यात्स यज्ञः स च यज्ञवित् ॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥

एको मनीषी निष्क्रियाणां बहूनामेकं सन्तं बहुधा यः करोति ।
तमात्मानं येऽनुपष्यन्ति धीरास्तेषं शान्तिः शाश्वती नेतरेषाम् ॥

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननोर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥

तिलेषु तैलं दधिनीव सर्पिरापः स्त्रोतःस्वरणीषु चाग्निः ।
एवमात्माऽऽत्मनि गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥

ऊर्णनाभिर्यथा तन्तून्सृजते संहरत्यपि ।
जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः ॥

पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखम् ।
हृदयं तद्विजानीयाद्विश्वस्याऽऽयतनं महत् ॥

नेत्रस्थं जाग्रतं विद्यात्कण्ठे स्वप्नं विनिर्दिषेत् ।
सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् ॥

यदात्मा प्रज्ञयाऽऽत्मानं संधत्ते परमात्मनि ।
तेन संध्या ध्यानमेव तस्मात्सन्ध्याभिवन्दनम् ॥

निरोदकाध्यानसंध्या वाक्कायक्लेशवर्जिता ।
संधिनी सर्वभूतानां सा संध्या ह्येकदण्डिनाम् ॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आन्नन्दमेतज्जीवस्य यं ज्ञात्वा मुच्यते बुधः ॥

सर्वव्यापिनमात्मानं क्षीरे सर्प्रिवार्पितम् ।
आत्मातपोमूलं तद्ब्रह्मोपनिषत्परम् ।
सर्वात्मैकत्वरीपेण तद्ब्रह्मोपनिषत्परमिति ॥ ४॥

इत्यथर्ववेदे ब्रह्मोपनिषत्समाप्ता ॥